दैर्घतमसानां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसौत-थ्यदैर्घतमसेति दीर्घतमोवदुतथ्यवदङ्गिरोवदिति ॥

॥ इति द्वितीयो गणः ॥

---

अयास्या गौतमा इत्येषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरसायास्यगौतमेति । गौतमवदयास्यवदङ्गिरोवदिति ॥

॥ इति तृतीयो गणः ॥

---

अयास्यौशिजा गौतमा इत्येतेषां पञ्चार्षेयः प्रवरो भवत्याङ्गिरसायास्यौशिजगौतमकाक्षीवतेति । कक्षीवद्वद्गौतमवदुशिजवदयास्यवदङ्गिरोवदिति ॥—

॥ इति चतुर्थो गणः ॥

---

अस्मिन्गौतमकाण्डे तत्रतत्राध्वर्युप्रवरेष्वङ्गिरस्वदङ्गिरस्वदिति लौगाक्षिपाठो द्रष्टव्यः ॥

इति कात्यायनलौगाक्षिप्रणीतं गौतमगोत्रकाण्डमुदाहृतम् ।

---

अथाश्वलायनीयं गौतमगोत्रकाण्डमुदाहरिष्यामः—

गौतमानामाङ्गिरसायास्यगौतमेति । उतथ्यानामाङ्गिरसौतथ्यगौतमेति । राहूगणानामाङ्गिरस-

राहुगण्यगौतमेति । सौमराजकीनां आङ्गिरससौमराज्यगौतमेति । वामदेवानामाङ्गिरसवामदेव्यगौतमेति । बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति - पृषदश्वानामाङ्गिरसपार्षदश्ववैरूपेति । ऋक्षाणामाङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति । कक्षीवतामाङ्गिरसौचथ्यगौतमौशिजकाक्षीवतेति । दीर्घतमसामाङ्गिरसौचथ्यदैर्घतमसेति ॥

इदमाश्वलायनोक्तं गौतमगोत्रप्रवरकाण्डमुदाहृतम्.

---

अथेदानीं एतानि गौतमगोत्रकाण्डानि व्याख्यास्यामः—यदुक्तमधस्तनभृगुगोत्रकाण्डव्याख्याने उपलक्षणमस्माभिः 'इहोदाहृतेषु गोत्रकाण्डेषु' इत्यारभ्य 'व्याख्यास्यामः'* इत्यन्तेन भाष्येण तत्सर्वमिहापि गौतमगोत्रकाण्डोपक्रमे द्रष्टव्यं, तुल्यत्वात् । इहोदाहृतानां गौतमगोत्रगणानां मध्ये पृषदश्वानामृक्षाणामाश्वलायनोक्तानां गौतमवरणादर्शनादुत्तरत्र वक्ष्यमाणरथीतरभरद्वाजैश्च सह समानप्रवरत्वश्रवणात्तत्रैवोत्कर्षः, तैश्च सहाविवाहो द्रष्टव्यः; तथैवान्यैस्सूत्रकारैर्वक्ष्यमाणत्वात् । इह तु गौतमगणमध्यपाठे कारणं किमप्याश्वलायनबुद्धिगम्यमस्तीति कल्प्यम् । उत्तरत्र पाठे तु विस्पष्टं कारणमस्तीत्युक्तम् ॥ इहापि गणाः प्रवराश्च निगदव्याख्यातत्वान्न व्याख्येयाः । इह च यत्रयत्रैकस्मिन्नेव गणे प्रवरऋषीणामेकद्वित्रिसङ्ख्याविषया क्रमविषया च विप्रतिपत्तिर्दृश्यते सूत्रकाराणां तत्रतत्रोक्तप्रयोगावलम्बिनामेव ते प्रवरा इति प्रयोगकृतव्यवस्था

---

*४५ पृष्ठे.

द्रष्टव्या ॥ इह गौतमगणानामृक्षदृषदश्वगणौ वर्जयित्वा सर्वेषां स्वंस्वं गणं विहाय परस्परमविवाहो द्रष्टव्यः; कुतः, समानगोत्रत्वात् । समानगोत्रत्वं च गौतमस्य सप्तऋषेरपत्यत्वात् । स्वेषु गणेषु सुतरामविवाहः, समानप्रवरत्वात् ॥ अपि च 'गौतमानां सर्वेषामविवाहः'* इति बोधायनवचनाच्च सर्वेषामविवाहः ॥

इति व्याख्यातं गौतगोत्रप्रवरकाण्डम् ॥

---

अत्र श्लोकः—

गौतमानां न सर्वेषां विवाहोऽस्ति परस्परम् ।
सगोत्रत्वाच्च वाक्याच्च बोधायनमुखोद्गतात् ॥ इति ॥

---

अतः परं भरद्वाजानां गोत्रप्रवरकाण्डमुदाहरिष्यामः । अत्र श्लोकः—

नमस्कारमष्टाङ्गमग्रे गुरूणामृषीणामतिप्रेमपूर्वं प्रयुज्य ।
भरद्वाजकप्यृक्षगर्गद्विगोत्रप्रभेदं प्रवक्ष्ये भरद्वाजकाण्डम् ॥

अत्र बोधायनः—

**भरद्वाजाः क्षाम्यायणा मगण्डा देवाश्वा उद्वहव्याः प्राग्वाशयो वाहलवा द्व्यौगा वासिनायनाः स्तौदेहा आत्रा औक्षा भूरयः परिणद्धेधाः केश-**

---

* ५१ पृष्ठे.

स्वेयाः सौ[illegible] उरूढाः खारिग्रीवयः औसयो व-योक्षिभेदा अग्निवेश्या वैश्यास्शठा गौरिवायनाः श्वेलकास्तनकर्णा ऋक्षा माणभिद्यः काष्ठोदका ज्वलयो वैलाश्वारुडादयो भरुण्डेय भद्राधयः सौर-भरा शुगा देवमतयः इषुमता वौदोदमेघयः प्रवा-हणेयाः कल्माश्वराजस्तम्भिसद्योपकृतपराहरयो वलभीकयो [illegible]पथः शालाहलयो वेदवेला नृ-त्यायनाश्शलालयः शार्दूलयः काक्षलाः बाष्क-लाः सैध्यकैधाः कौण्डायनाः कौण्डिल्याः ब्रह्मस्त-म्भा राजस्तम्भा अग्निस्तम्भा वायुस्तम्भास्सूर्य-स्तम्भास्सोमस्तम्भा विष्णुस्तम्भा यमस्तम्भा इ-न्द्रस्तम्भा आपस्तम्भा ये चान्ये स्तम्भस्तम्भ (ब) शब्दा आरणसिन्धुकौमुदगन्धयः शिखायना आ-त्रेयायणा भामाण्यः कुक्षाः कौर्काक्षयो नैतुतयो दाभयः श्यामेया मत्सकायाः कारुणायनाः कारु-पथयः कारिषायणाः कावल्या इत्येते भरद्वाजास्ते-षां त्र्यार्षेयः प्रवरो भवति । आङ्गिरसबार्हस्पत्य भारद्वाजेति होता । भरद्वाजवद्बृहस्पतिवदङ्गिरोव-दित्यध्वर्युः । रौक्षायणाः कपिलाश्शिपिलाश्शैपि-ला वैपिण्डकौतुमोग्निजिह्वी च कण्वी च सतिश्वै-

ते* रौक्षायणास्तेषां पञ्चार्षेयः प्रवरो भवति। आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति होता। मतवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः† । गर्गास्सांभरायणास्सखीना यौगन्धरायणा बाहुलकयो भ्रष्टयो भृष्टुभिन्दयः क्रोष्टकयस्सौयामुनिर्भाजिताक्षयो होत्रपचयस्सत्यपचयो जायावता वाटाश्शाखायनयस्साङ्कृहवान्तुल्योवेणुहानिस्सोहर्ता कारी पौचिको बाभ्याराजवतः पौलय इत्येते‡ गर्गास्तेषां पञ्चार्षेयः त्र्यार्षेयो वा प्रवरो भवति—आ[illegible]रसबार्हस्पत्यभारद्वाजगा-

---

*—भरद्वाजाः...मागण्डा...उद्दालगाः प्राग्वंशयोवाशल...स्तेदेहा आश्ना औक्काभुरयः पारिणद्येयाश्शैखेयाश्शौद्रयदूढाः गारिम्रीवाः औपशयो...अग्निवेश्याव्यवाया...खेलकास्तनुकर्णापरोक्षामाणभिन्दव्याः काम्बोदकास्तौज्वलयो वैणा कारुणादयो भारुण्डेया माद्रपथयः श्रुतोहगाश्शुंगाः...इषुमतयो वोदमेघयः...कल्माषाराज... सिन्दूपक्वद्वाराहयो वलभीगयो...शैलाहिलिनो देववेला महोवेला ऋंजायनाश्शाल्यः... तत्कलाः वात्कलाः सत्यकासिन्धाः...इन्द्रस्तम्भा ये चान्ये...शब्दाश्शिष्टा आरुणि सिन्धुकौमुदगन्धिश्शक्तिशाकिकायना आत्रेयाणामामं आधूमगन्धाः काप्यायनामृतन्तयो धार्तयो श्यामेयामत्स्यक्राथाः कौकायणाः कारुपथयः कारिषायणाः काल्मा इत्येते...शिफिलाश्शैफिलाः वैफिडाः कौधुमो...सूचिश्चैते.

† ध्वर्युः । कपयः वैतालानामैतिशायनानां ताण्डिनां भोजसीनां शार्ङ्गरवाणां खरशस्ताण्डानां मौषान्तकस्संशयः पौष्पयः इत्येते कपयः । तेषां त्र्यार्षेयः प्रवरो भवति आंगिरसामहय्योरुक्षयेति । उरुक्षयवदमहय्यवदङ्गिरोवदित्यध्वर्युः । इत्यधिकपाठः शृं—कोशे.

‡ सांभरायणास्सांख्यायना...वाधूलकयो...भ्रष्टविदवः क्रौष्टुकयः...भाजितीक्षयो हौत्रपचयस्सत्यापचयो दीनवल्यः पलाशशाखावन्तः संभ्रहवत्तुल्यो वेणुभारिः सौहधाः कारिरोतिः कैबाल्या राजवलोल्य इत्येते,

पौलिखङ्खलायना इत्येषां अविवाहस्तेषां त्र्या-र्षेयः प्रवरो भवति । आङ्गिरसबार्हस्पत्यभारद्वाजे-त्यङ्गिरोवद्बृहस्पतिवद्भरद्वाजवत् ॥ कालायनः केश-मर्थोवत्र्यतरायणा भ्राष्ट्रकृत्रासूत्तितिरैन्द्रालिशाल-ङ्कायानाः कौलास्त्रक्रियास्वाक्रिवकालकृन्मातुल-यावकृन्मालपरौपकर्मयः प्रष्यङ्गाः पैगलायना-श्श्यामाश्शामायना गर्गास्साम्परिवाराः तेषाम-विवाहस्तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गि-रसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येति । अङ्गिरोव-द्बृहस्पतिवद्भरद्वाजवत्सिनिवद्गर्गवत् ॥ तित्तिरिः क-पिर्भूमिः खन्दिनो गर्गा इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरससैन्यगा-र्ग्येत्यङ्गिरोवत्सिनिवद्गर्गवत् । कपिस्तित्तिरिर्विदिर्द-ण्डिश्शक्तिः पतञ्जलिर्भूयसीतिवरधिश्वैतकिरध्वा-सूराजकेशिकलानिकटङ्कोरीरयो वान्यायनः का-त्यायन इत्येतेषां त्र्यार्षेयः प्रवरो भवति । आङ्गि-रसामहय्यौरुक्षयेति । अङ्गिरोवदमहय्यवदुरुक्षयव-दिति ॥ सङ्कृतिपूतिमाषताण्डिसाम्बसैपठनजान-

कितैराघातरव्यऋषिभीवारायणीसहिगाङ्गिलौक्षि - तालागा* इत्येषामविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति—आङ्गिरससाङ्कृत्यगौरिवीतेति । अङ्गिरोवत्स-ङ्कृतिवद्गुरुवीतवत् । लोमायनाहरितकौत्सपैगदाल्भ्य-शङ्खहैमगवहास्त्यदासिवात्स्यपाणिभाद्रिकाभिलवे - णा इत्येतेषामविवाहः तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरसाम्बरीषयौवनाश्वेति, मान्धात्रम्बरीषयौव-नाश्वेति वा । मान्धातृवदम्बरीषवद्युवनाश्ववदि-ति । अथ विष्णुवृद्धाः शठपत्रिणिजडिणिकत्रिणि-पुत्रिणिबादरायणा इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरसपार्षदश्वराथीत-रेति । अङ्गिरोवत्पृषदश्ववद्रथीतरवत् । रथी तराणां त्र्यार्षेयः प्रवरो भवति । आङ्गिरसवैरूपराथीतरेति अङ्गिरोवद्विरूपवद्रथीतरवत् । पुरुकुत्सानां त्र्यार्षेयः

---

*...वासिनायनि...शौगितुषकर्णप्रवाहेरयानां आश्वलायनिवाश्रौमि...रधिकारिथी-वाणां...साजम्मिकार्दरूककाय...तुटियोत्रितैाचक्रानां समस्तैषितौल्वलिवयु-गाद्वषाणां...सौबुधिसातरद्वारद्वाजौ...पटेषुमतिदेववान्तिदेवस्थानिहरितकार्णि-ध्वाङ्कविधौगेय...मात्स्यकाथसलाहरलोहारगांगोहकि...कार्ष्णपिंजलि......मौशपृश्निवौलि...रौपर्कनैषण्ड्यगाः...स्यामायनाः गार्ग्याः...शैन्यगार्ग्येति....शिनिवत्...भूमिस्स्वंगिरोबादिनां गर्ग इत्ये...भूबसातिरथिश्वैतकि...कला-शिकटङ्कारिरावोवात्यायना अमावास्यायनाः...सांकृतिपूतिमाषतण्डिशम्बुशै-बुगम्रानकिराधारतव्यऋषिमिवारायणिसत्त्वहिलेगांगिलौगाक्षितारामह इत्ये-तेषां,

प्रवरो भवति । आङ्गिरसपौरुकुत्स्यत्रासदस्य्वेति । अङ्गिरोवत्पुरुकुत्सवत्त्रसदस्युवत् । बृहदुक्था वामदेवः इत्येतेषामविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरसबार्हदुक्थवामदेवेति । अङ्गिरोवद्बृहदुक्थवद्वामदेववत् । हिरण्यस्तम्बिसात्यमुग्रिसौद्गला इत्येतेषामविवाहः तेषां त्र्यार्षेयः प्रवारो भवति। आङ्गिरसभर्म्यश्वमौद्गल्येति । अङ्गिरोवद्भर्म्यश्ववन्मुद्गलवत् ।

भरण्डाश्च हिरण्डाश्च तृतीयाश्शाकटायनाः ।
ततः प्रागदसौनारी मर्कटो रमणश्शणः ॥

कण्वा मात्कटया रमणा श्शाणायणा इत्येतेषामविवाहस्तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरसाजमीढकाण्वेति अङ्गिरोवदजमीढवत्कण्ववत् ॥ अथेमानि द्व्यामुष्यायणकुलानि भवन्ति । भरद्वाजाः आधाश्शौङ्गाश्शैशिरा इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिरेति । अङ्गिरोवद्बृहस्पतिवद्भरद्वाजवच्छुङ्गवच्छिशिरवत् ॥ कपिलाश्च शबराश्च विभिण्डकौथुमाग्निजिह्वी च कर्णश्च सूतश्च बृहद्भर-

द्वाजा इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस बार्हस्पत्य भारद्वाजवान्दनमात-वचेति । अङ्गिरोवद्बृहस्पतिवद्भरद्वाजवद्वन्दनवन्म-तवचोवदिति ।

इति कात्यायनलौगाक्ष्युक्तं भरद्वाजगोत्रकाण्डमुदाहृतम् ॥

---

अथाश्वलायनोक्तं भरद्वाजगोत्रकाण्डमुदाहरिष्यामः ॥ आहाश्व-लायनः—

भरद्वाजाग्निवेश्यानामाङ्गिरसबार्हस्पत्यभारद्वा-जेति । मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति । तार्क्ष्यं हैके ब्रुवतेऽतीत्याङ्गिरसं तार्क्ष्यभार्म्यश्वमौ-द्गल्येति । विष्णुवृद्धानामाङ्गिरसपौरुकुत्सत्रासदस्य-वेति । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्य-शैन्येति । आङ्गिरससैन्यगार्ग्येति वा ॥ *हरि-तकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौव-नाश्वेति । मान्धातारं हैके ब्रुवतेऽतीत्याङ्गिरसं मान्धात्राम्बरीषयौवनाश्वेति । सङ्कृतिपूतिमाषत-ण्डिशाम्बुशैवगवानामाङ्गिरसगौरिवीतसाङ्कृत्येति । शक्तिर्वा मूलं शाक्त्यगौरिवीतसाङ्कृत्येति ॥ क-

*भरद्वाजाः कात्ताः...भार्म्यश्वमौद्गल्येति...आङ्गिरसगार्ग्य शैन्येति वा.

ण्वानामाङ्गिरसाजमीढकाण्वेति । घोरमुहैके ब्रुवते अवकृष्याजमीडमाङ्गिरसघौरकाण्वेति । कपीनामाङ्गिरसामहय्यवौरुक्षयसेति । अथ य एते द्विप्रवचना यथैतच्छौङ्गशैशिरयो भरद्वाजाश्शौङ्गाः कताश्शैशिरयस्तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः द्वौ वेतरस्त्रीनितरतो न हि चतुर्णां प्रवरोस्ति न पञ्चानामतिप्रवरणम् । आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ॥

॥ इत्याश्वलायनोक्तं भरद्वाजगोत्रकाण्डमुदाहृतम् ॥

---

अथ मत्स्यपुराणोक्तं त्रिविधमङ्गिरसां गोत्रप्रवरकाण्डमुदाहरिष्यामः—

मत्स्य उवाच—

मरीचितनया राजन्त्सुरूपा नाम विश्रुता ।
भार्या साऽङ्गिरसो देवास्तस्याः[1]पुत्रा दश स्मृताः॥
आत्मा ह्यायुर्मनो दक्षो दमः प्राणस्तथैव च ।
हविष्मांश्च गविष्ठश्च [2]ऋतुस्सत्यश्च ते दश ॥
इत्येतेऽङ्गिरसो नाम देवा वै सामगायिनः ।
सुरूपा जनयामास ऋषीन्त्सर्वेश्वरानिमान् ॥

---

[1] देवी तस्याः.  [2] हविष्मान्सहविष्यश्च.

बृहस्पतिं गौतमं च संवर्तं च महाऋषि- ।
अयास्यं वामदेवं च उचथ्यमुशिजं तथा ॥
इत्येते ऋष्यस्सर्वे गोत्रकाराः प्रकीर्तिताः ।
तेषां गोत्रसमुत्पन्नान्गोत्रकारान्निबो- मे ॥
उचथ्यो गौतमश्चैव नैलेयो[1] भिजितस्तथा ।
बौ- र्नगस्सौगमाक्षिक्षीरयो रिकिरेव च[2] ॥
राहोः कर्णिस्सौपत्रि[3] श्च कैराति- -ामलोमकिः ॥
पैष्कजतिर्भार्गतवो ह्यृषिश्चण्डान्तक[4] स्तथा ।
करोटस्सुतपा वीर उपबिन्दस्सुरैषिणः ॥
रौहिणेयानिचोराणिः कोष्ठश्चे[5] वारुणायनिः ।
सामोद- -िका-ोरकौ-िल्याः पार्थिवा[6] स्तथा ॥
रौहिणेयानिरो- -न्ममूलयो वासुरेव च ।
कापाक्षिपुष्पवश्चैव क्षार- -रण्डिरव च[7] ॥
क्षयो विश्वन्तिरेविश्च पाचिकोरविरेव-[8] ।
-्यार्षेयप्रवरा ह्येते तेषां वा प्रवरान् शृणु ॥

---

[1] पललेयो.
[2] बोधिर्नगस्सगोमाक्षिकिरटोटिः.
[3] रौह्रीकर्णिस्सपत्रि.
[4] पैष्पजित्रिर्भातयो ऋषिश्चण्डाण्डक... रूपाबिन्दवः.
[5] तारार्णः काष्ठश्चे.
[6] सोमोदयानिकाष्ठोर...र्थिव.
[7] निरोयान्न...काणाक्षि...क्षीरकरंसिरे.
[8] जयविश्वंभरे विश्वपालिकारिविरेव च.

अङ्गिराश्च वचोतिश्च[1] उशिजश्च म॒ानृषिः ।
परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥
आत्रेयायानसाविष्टौ अग्निवेशशिशलास्थलिः ।
वाल्॒आ निश्चिकिपि[2] वीराहिर्बाष्कलिस्तथा ॥
सौटिश्च नृणवर्णिश्च प्रवाहिश्च लभायनिः[3] ।
वाह्यगच्छश्च दिष्टाकिः स्वारग्रीविस्तथैव च ॥
व्यटाकिर्जित्यद्रोणिश्च जैक्षला[4]यनिरेव च ।
आपस्तम्बिर्मार्जवृष्टिर्गोस्वपिङ्गलिरेव च ॥
पैलश्चैव महातेजाश्शालङ्कायनिरेव च ।
त्र्यार्षेयः प्रवरश्चैव सर्वेषा प्रवरो मतः ॥
अङ्गिराः प्रथमस्तेषां द्वितीयश्च बृहस्पतिः ।
तृतीयश्च भरद्वाजः प्रवराः परिकीर्तिताः ॥
परस्परमवैवाह्या इत्येते परिकीर्तिताः ।
काण्वायनाः कौजवथः तथा वात्स् तरायणः[5]॥
भ्रष्टृकद्रृष्टृविष्णी च लैत्यालिश्शाकलायनः ।
कौडिश्चाक्री च वार्ष्णिश्च[6] लातकृन्मधुरावहः ॥

---

[1]वरोतिश्च.

[2]साविष्टा वग्निवेशशिशलायनिः...... यनिस्स्विकि.

[3]सौहिश्च तृणकर्णिश्च प्रभाहिश्च लभार्यनिः.

[4]चोरग्रीवि...वटाकिर्नित्यरोगिश्च जं- जिला.

[5]र्महिवृश्चि...कौजिवया...वाश्यांभरा.

[6]भ्राष्टृ...भ्रष्टविष्मा च...कौण्डिश्चाक्रि श्च वार्ष्मिश्च...

त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरश्शुभः ।
अङ्गिराश्च विरूपश्च पृषदश्वस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
सत्यमुग्रिमुद्गलेज्ञा हिरण्यस्तम्बिमुद्गलौ ॥
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरो नृप ।
अङ्गिराश्चैव भार्म्याश्वः मुद्गलश्च महातपाः ॥
परस्परमवैवाह्या इत्येते परिकीर्तिताः ।
हंसजिह्वो देवजिह्वाआलवालविडादयः ॥
आयाग्रेयास्सुग्रयश्च पाराण्यांतनिमौद्गलाः[1] ।
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरश्शुभः ॥
अङ्गिराश्चैव ताविश्च मौद्गलश्च महांस्तथा[2] ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
आर्षादयश्चतुरायः तृतीयश्शाकटायनः[3] ।
ततः प्रागादसौनारी मर्कटो रमणस्सणः ॥
कण्वामर्कटयश्चैव तथा गादायनो रथिः[4] ।
श्यामायनिस्तथैवेषां त्र्यार्षेयः प्रवरो मतः ॥
अङ्गिराश्चाजमीढश्च कण्वश्चैव महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

---

[1] पौराण्येतानि मौद्गलाः.
[2] भार्म्यश्च मौद्गल्यश्च महातपाः.
[3] पार्षदश्वस्तुरयः...शाकटायनः.
[4] कार्मण्वामर्कटयश्चैव...मादायनो.

तित्तिरिः कपिभूश्चैव गार्ग्यश्चैव महानृषिः ।
त्र्यार्षेयोभिमतस्तेषां सर्वेषां प्रवरश्शुभः ॥
अङ्गिरास्तित्तिरिश्चैव कपिभूश्च महाऋषिः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
अश्वरिष्कभरद्वाजौ * ऋथिश्वान्मानवस्तथा ।
ऋषिमन्त्रवरश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥
अङ्गिराश्च भरद्वाजस्तथैव च बृहस्पतिः ।
ऋषिर्मैत्रवरश्चैव ऋषिरात्मभुव † स्तथा ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
भारद्वाजा हुतश्शौङ्गश्शैशिरेयस्तथैव च ॥
इत्येते कथितास्सर्वे द्व्यामुष्यायणगोत्रजाः ॥
पञ्चार्षेयास्तथाह्येषां प्रवरा परिकीर्तिताः ।
अङ्गिराश्च भरद्वाजस्तथैव च बृहस्पतिः ॥
मौद्गल्यश्शैशिरश्चैव प्रवराः परिकीर्तिताः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ‡ ॥

---

*अम्बरीषभरद्वाजौ.

†ऋषिर्मानवरः.

‡अत्र कुण्डलितो ग्रन्थः कलिकातामुद्रित मत्स्यपुराणे दृश्यते, न क्वचिदप्यस्मिन्प्रवरमञ्जरीकोशे.

एते तवोक्ताङ्गिरसास्त्रिधोक्ता
महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्ना परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

इति मत्स्यपुराणे प्रवरानुकीर्तने त्रिविधानामङ्गिरसां प्रवराध्यायो द्वितीयः ॥

---

इह मत्स्यपुराणोक्ते त्रिविधाङ्गिरसां प्रवरकाण्डे परिकीर्तितानां गोत्राणां मध्ये येषां प्रवरेषु गौतमः सप्तर्षिर्व्रीयमाणतया सत्तया वाऽनुवर्तते तेषां परस्परमविवाहः, समानगोत्रत्वात्, "गौतमानां सर्वेषामेवाविवाहः" इति बोधायनवचनाच्च । तथा येषां गोत्रगणानां प्रवरेषु भरद्वाजः सप्तर्षिर्व्रीयमाणतया सत्तया वाऽनुवर्तते तेषां परस्परमविवाहः; समानगोत्रत्वात्*, "भरद्वाजानां सर्वेषामविवाहः" इति बोधायनवचनाच्च† ॥ इतरेषां सप्तर्षिबाह्यानां केवलाङ्गिरसां हरितकुत्सकण्वरथीतरपृषदश्वमुद्गलविष्णुवृद्धादीनां परस्परं विवाहः, सगोत्रत्वाभावात्, स्वेस्वे गणे चाविवाहः, समानप्रवरत्वादिति समुदायार्थः ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
मत्स्यपुराणोक्तप्रवराध्याये त्रिविधाङ्गिरसां
गोत्रप्रवरकाण्डमुदाहृत्य व्याख्यातम्.

---

*इदं पञ्चम्यन्तं शृं—कोशे नास्ति. †अत्र चकारः शृं—कोशे नास्ति.

अथेमानि काण्डानि पिण्डीकृत्य व्याख्यास्यामः—

यदुक्तमधस्ताद्भृगुगोत्रकाण्डव्याख्यानारम्भे सति "इहोदाहृतानाम्" इत्यारभ्य "व्याख्यास्यामः"[1] इत्येवमन्तेन ग्रन्थेन तत्सर्वमिहापि स्मर्तव्यम् । अत्रोदाहृतेषु सूत्रकाण्डेषु सूत्रकाराणां पाठक्रमव्यत्यासो महानस्ति; विशेषतश्चाश्वलायनसूत्रपाठे । कथं? । बोधायनकात्यायनाश्वलायनादिभिः शुङ्गशैशिरयोन्ते पठिताः । आपस्तम्बादिभिः भरद्वाजगणमध्ये पठिताः । ऋक्षाः पुनराश्वलायनेन गौतमकाण्डमध्ये पठिताः इहोत्कृष्यन्ते । कपयस्त्वङ्गिरोभ्यो वा ऋक्षेभ्यः परत उक्ता आपस्तम्बादिभिः । इतरैस्सर्वैरुत्तरत उक्ताः । तथा—सांकृत्यादयोपि बोधायनादिभिरन्तरे पठिताः । वसिष्ठगणान्तस्त्वापस्तम्बादिभिरुक्ताः । तथा—हरितमुद्गलादीनामपि तत्रतत्र पाठक्रमेण भेदः । एवम्भेदे सिद्धे सत्यपि बोधायनापस्तम्बकात्यायनादीनां बहूनां पाठक्रमानुसारेण विवाहाविवाहौ वक्ष्यामः—तत्र केवलभरद्वाजानां प्रथमपठितानां शुङ्गशैशिरीणां भरद्वाजग्राथादीनां द्व्यामुष्यायणादीनां परस्परमविवाहः.* कुतः? समानगोत्रत्वात् । समानगोत्रत्वं च सर्वेषामेषां भरद्वाजस्य सप्तर्षेरपत्यत्वात्, वरणाच्च । 'भरद्वाजानां सर्वेषामवाविवाहः' इति बोधायनवचनाच्चाविवाहः । गर्गाणां भरद्वाजत्वं भरद्वाजवरणा† देव सिद्धम् । 'त्र्यार्षेयगर्गाणां भरद्वाजक्षाणां चाविवाहः' इति गार्ग्यवचनाच्चाविवाहः । कपीनां भरद्वाजत्वं भरद्वाजवर‡ णाभावादसिद्धमिति चेत्—नासिद्धम्; आपस्तम्बादिभिर्भरद्वाजगणमध्ये प्रसिद्धभरद्वाजानां ऋक्षाणां गर्गाणां च मध्ये पठितत्वात्, पराशरवचनाच्च । तथाहि—विष्णुपु-

---

* ग्राथादीनां च परस्परमविवाहः. इति शृ—पा.

[1] ४५-पृष्ठे.

† द्वाजगणत्वादेव. इति शृ—पा.

‡ भरद्वाजगणा. शृ—पा.

राणे चतुर्थेंऽशे एकोनविंशाध्याये पूरोर्वंश- कीर्तनप्रस्तावे 'दुष्यन्ता-च्चक्रवर्ती भरतो बभूव '* इत्यारभ्य यन्नामानो यत्क्रमका यावन्तश्च कपीनां प्रवरर्षयोऽत्र श्रुताः तन्नामानः तत्क्रमकाः तावन्तश्च पराशरेणोपदिष्टाः वंशानुपूर्व्यात्. तत्र प्रथमोऽङ्गिराः, ततो बृह-स्पतिः, ततो भरद्वाजः, ततो भरद्वाजादामहय्यः, तत उरुक्षयः, ततः कपिरुत्पन्नः' इति । तत्र सत्स्वेव बहुषु मन्त्रदृक्षु त्रयाणा-मेव वरणं सूत्रकारैरुक्तं रथीतराणामिवेत्यदोषः । तथाहि व्या-सवचनम्—

> इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
> बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ इति ॥

द्व्यामुष्यायणाः शुङ्गशैशिरय इति पुरातनद्विगोत्रकुलं दृष्टा-न्तत्वेनोदाहृतं इदानीन्तनानां द्विगोत्राणां द्वयोरपि गोत्रयोरविवाहं वक्तुम् । भरद्वाजाश्शुङ्गाः, भरद्वाजगणमध्ये पठितत्वात् । तेषां चायं प्रवर उक्तः—आङ्गिरसबार्हस्पत्यभारद्वाजेति । कताश्शै-शिरयो विश्वामित्राः; विश्वामित्रगणमध्ये पठितत्वात् । तेषां चा-यं प्रवरो वक्ष्यते—वैश्वामित्रकात्यात्कीलेति । तत्र च—

> अपुत्रेण परक्षेत्रे नियोगोत्पादितस्सुनः ।
> उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥†

इति याज्ञवल्क्यवचनात् द्व्यामुष्यायणानां उभयत्र प्रवरे कर्तव्ये सति षण्णां मन्त्रदृशां चतुर्णां च "न चतुरो वृणीते न पञ्चा-तिवृणीते" इति वरणप्रतिषेधात् पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरः कर्तव्यः । तत्र च द्विप्रवरसन्निपाते पूर्वप्रवर उत्पादयितुरुत्तरः परिग्रहीतुरिति कात्यायनलौगाक्ष्योरुत्तरत्र वचनात् भारद्वाजस्य

* ४-१९-१०.

† २-१२७.

शुङ्गस्य बीजात् वैश्वामित्रस्य कतस्य क्षेत्रोत्पन्नाः शुङ्गशैशिरय इत्युच्यन्ते । तत्सन्ततिजानां पञ्चार्षेयः प्रवरो द्रष्टव्यः—आङ्गिरस-बार्हस्पत्यभारद्वाजकात्यात्कीलेति । त्र्यार्षेयमपि प्रवरमाहुरापस्त-म्बादयः—आङ्गिरसकात्यात्कीलेति । अयमेव दृष्टान्तो द्रष्टव्यः सत्स्वपि बहुषु मन्त्रदृक्षु कतिपयानामेव च वरणमस्तीत्यत्र । एवं पुत्रिकापुत्रदत्तक्रीतपुत्रादीनामपि द्वयोरपि गोत्रयोरविवाहः प्रवरश्च द्रष्टव्यः, शुङ्गशैशिरीणां दृष्टान्तत्वेनोक्तत्वात् । 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च'* इत्येतद्गौतमवचनं द्व्यामुष्यायणा-दन्यविषयं द्रष्टव्यम् । द्व्यामुष्यायणानां तु पितृगोत्रमेवोभयम-पीत्युभयत्राविवाह एव । सङ्कृत्यादीनामिहाङ्गिरसां गणेपूक्तानां उत्तरत्र आपस्तम्बादिभिः वसिष्ठगणान्ते वक्ष्यमाणत्वात् वासिष्ठ-स्यापि शक्तेरङ्गिरसां प्रवरेषूपदेशाच्च† किं वसिष्ठास्सङ्कृतयः? किं वाऽङ्गिरसः? इत्यत्र सन्देहेऽन्यतरपक्षनिश्चयहेतोरभावात् द्व्यामुष्यायणा-स्सङ्कृतय इत्यवसातव्यम्, कात्यायनेनोत्तरत्र द्व्यामुष्यायणगणम-ध्ये प्रसिद्धद्व्यामुष्यायणैः शुङ्गशैशिरिभिस्सह वक्ष्यमाणत्वात् । द्व्यामुष्यायणत्वे च सङ्कृतीनां स्वगणोक्तैरुपमन्युपराशरकुण्डिनादि-भिर्वासिष्ठैस्सर्वैस्सह विवाहो नास्ति‡ । तस्मादिह भरद्वाजकाण्डे केवलभरद्वाजानां ऋक्षाणां कपीनां गर्गाणां द्विगोत्राणां च प-ञ्चानां गणानां परस्परमविवाहः ; सगोत्रत्वात्, बोधायनवा-क्याच्च । इति व्याख्यातं भरद्वाजगोत्रकाण्डम् ॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
भरद्वाजगोत्रप्रवरकाण्डं समाप्तम्.

---

*गौतमधर्मसू–४–३, ४.

†वरणोपदेशाच्च इति पाठान्तरम्.

‡विवाहोस्ति, इति पा.

उक्तमङ्गिरसां मध्ये सप्तर्षेर्गौतमस्य च ।
भरद्वाजस्य चाखण्डं गोत्रकाण्डम[illegible]ःपरम् ॥
सप्तर्ष्यपत्यबाह्यानां केवलाङ्गिरसामपि ।
अधुना वक्ष्यते काण्डं विवाहप्रवरैस्सह ॥
हरितानथ कुत्सांश्च कण्वानपि रथीतरान् ॥
मुद्गलान् विष्णुवृद्धांश्च सप्तर्षिभ्यो बहिष्कृतान् ।
क्रमेणानेन वक्ष्यामः केवलाङ्गिरसां गणान् ॥

अत्र बोधायनोक्तं केवलाङ्गिरसां काण्डमुदाहरिष्यामः—

हरितास्साङ्ख्योदभ्यः सौभागा भैरवा ममना-युर्लावादरो महोदरो नैमिश्रया मिश्रोदराः कौतपाः कारीषयः कौल[illegible]ः पौलयः पौडलोमाधूयो-मान्धातुमण्डिकारय*इत्येते हरिताः। तेषां त्र्यार्षेयः प्रवरो भवति आङ्गिरसाम्बरीषयौवनाश्वेति होता युवनाश्ववत् अम्बरीषव[illegible] अङ्गिरोवदित्यध्वर्युः। कण्वा औपमर्क[illegible]यकाः कलाः [illegible] मा-जिमाजयो मौ[illegible]श्रवस† इत्येते कण्वाः। तेषां त्र्यार्षेयः प्रवरो भवति आङ्गि-र[illegible]ढकाण्वेति होता कण्ववदजमीढवदङ्गिरो-

---

*हरिताः कात्सास्सांख्यो दाभ्यों भैजो भैमगवो गममनायुर्लावो माहोदरो नैमिश्रवो मिश्रोदरः कौलपाः कौललः पोलल: पौण्डरलो माधूपो...मांद्रकारः.

†मर्कठायनाः वात्कारोशेला...मौंजिमौंजियोमोमोजिगन्धावाजिवाजयो वाजिश्रवसः.

[illegible] आग्रापयः पूतिमाषाः* इत्येते संकृत-यः। तेषां त्र्यार्षेयः प्रवरो भवति आङ्गिरससांकृत्यगौरुवीतेति होता। गुरुवीतवत् सङ्कृतिवदङ्गिरोवदित्यध्वर्युः। कपयः वैतलानामैति शायननां पतञ्जलानां तरस्विनां ताडिनां भोजसिनां कासवराणां करासिखण्डानां आमौखितकिसागसखपोष्पय† इत्येते कपयः तेषां त्र्यार्षेयः प्रवरो भवति आङ्गिरसामहय्यौरुक्षयेति होता उरुक्षयवत् अमहय्यवत् अङ्गिरोवदित्यध्वर्युः ॥

इति बोधायनोक्तं केवलाङ्गिरसां प्रवरकाण्डमुदाहृतम् ॥

---

अथ आपस्तम्बोक्तं केवलाङ्गिरसां प्रवरकाण्डमुदाहरिष्यामः—

अथ हरितानां त्र्यार्षेयः आङ्गिरसाम्बरीषयौवनाश्वेति युवनाश्ववदम्बरीषवदङ्गिरोवदिति मान्धातारमुहैकेङ्गिरसस्थाने मान्धात्राम्बरीषयौवनाश्वेति युवनाश्ववदम्बरीषवत् मान्धातृवदिति। अथ कुत्सानां त्र्यार्षेयः आङ्गिरसमान्धात्र कौत्सेति कुत्स-

---

*लमकाः पौस्त्यस्तण्डि शम्भुशैभवः परिभवस्तारकाद्या हारिद्राः चैततियाश्चैतायनाश्चारायणा आन्त्यायना आर्षभयश्चान्द्रायणा अवघ्रापयः पूतिभाष्याः.

†वैतालायनामै...ताण्डिनां बोजसूनां शार्ङ्गरवाणां तरासिखण्डीनां मौषीतकिः सांख्यः पौषाः.

वन्मान्धातृवदङ्गिरोवदिति । अथाजमीढाः कण्वाः तेषां त्र्यार्षेयः आङ्गिरसाजमीढ[illegible]ण्वेति कण्ववद-जमीढवदङ्गिरोवदिति । अथ विरूपा रथीतराः तेषां त्र्यार्षेयः आङ्गिरसवैरूपपार्षदश्वेति पृषदश्ववद्विरू-पवदङ्गिरोवदिति । अष्टादंष्ट्रमुहैकेऽङ्गिरसस्थाने ब्रुव-ते—आष्टादंष्ट्र वैरूपपार्षदश्वेति पृषदश्ववद्विरूपवद-ष्टादंष्ट्रवदिति । अथ मुद्गलानां त्र्यार्षेयः आङ्गिरस-भार्म्यश्वमौद्गल्येति मुद्गलवद्भर्म्यश्ववदङ्गिरोवदिति । तृक्षमुहैकेऽङ्गिरसस्थाने । तार्क्ष्यभार्म्यश्वमौद्गल्येति । तृक्षवद्भर्म्यश्ववन्मुद्गलवदिति । अथ विष्णुवृद्धानां त्र्यार्षेयः आङ्गिरसपौरुकुत्सत्रासदस्यवेति त्रसद-स्युवत् पुरुकुत्सवदङ्गिरोवदिति । एष एवाविकृतः [illegible]द्रणमन्द्रण *बादर[illegible]त्यौपगवि-सात्यकिसात्यकाम्यारुणिनितुन्दादीनामिति ॥

इत्यापस्तम्बोक्तं केवलाङ्गिरसां गोत्रप्रवरकाण्डम् ॥

---

लौगाक्षिकात्यायनाश्वलायननिरुक्तानि केवलाङ्गिरसां प्रवरकाण्डा-न्यधस्तादेवोदाहृतानि ॥†

---

*मूं—दाठमर्षणमरणमद्रण.

†५९-६४ पुटेषु द्रष्टव्यम्

अथेमानि काण्डानि व्याख्यास्यामः—यदुक्तमधस्तात् भृगुगोत्रकाण्डव्याख्यानारम्भे 'इहोदाहृतानाम्' इत्यारभ्य 'व्याख्यास्यामः' इत्येवमन्तेन भाष्येण तत्सर्वमिहापि स्मर्तव्यम्, प्रयोजनगौरवादिति। अत्रोदाहृतानां मध्ये हरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धव्यतिरिक्तानां द्व्यामुष्यायणकण्वादीनां [1]भरद्वाजगणेन्तर्भावात् भरद्वाजैस्सह अविवाह उक्तः। बृहदुक्था रथीतरा एवेत्येके [2]मन्यन्ते। अपरे—बृहदुक्थानां रथीतराणां च भेदेन गणमुपदिश्य मत्स्यपुराणे एकप्रवरोपदेशात् रथीतरेभ्योन्ये पृषदश्वा इति मन्यन्ते। तस्मिन्नपि पक्षे रथीतराणां पृषदश्वानां परस्परमविवाहः, त्र्यार्षेयाणां द्व्यार्षेयसन्निपातात्। संकृतीनां तु द्व्यामुष्यायणत्वाद्वसिष्ठगणोक्तैः स्वगणोक्तैश्चाविवाह उक्तः॥

अथेदानीं हरितानां [3]विवाहं वक्ष्यामः—हरितानां कुत्सानां च परस्परमविवाहः; त्र्यार्षेयाणां द्व्यार्षेयसन्निपातात्, आपस्तम्बपाठे आश्वलायनपाठे च हरितकुत्सपिङ्गशङ्खेत्यादिना समानप्रवरोपदेशात्। इतरेषां कण्वरथीतरमुद्गलविष्णुवृद्धानां परस्परं च पूर्वोक्तैः वक्ष्यमाणैश्चात्र्याभिस्सह विवाहोस्ति, सगोत्रसमानप्रवरत्वयोरभावात्। इति व्याख्यातं केवलाङ्गिरसां प्रवरकाण्डम्॥

इति पुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां केवलाङ्गिरसां प्रवरकाण्डानि समाप्तानि.

---

अथात्रीणां गोत्रप्रवरकाण्डान्युदाहरिष्यामः—

बोधायनादि मुनिबृन्दपदारविन्दप्रादुर्भवत्प्र[4]वरगोत्रविवाहभेदम्।

---

[1]शृं—द्व्यामुष्यायण जल्णानाम्.　　[2]उक्तः। रथीतरा एवंचेत्येके.

[3]हरितादीनां.　　[4]प्रादुर्भवात्.

तत्पादपङ्कजदळस्मरणप्रसादादत्रेश्च गोत्रगणकाण्डमहं प्रवक्ष्ये ॥

यथोक्ता भृग्वङ्गिरसां गोत्रप्रवरमञ्जरी ।
कल्पसूत्रपुराणोक्ता तथात्रीणां च वक्ष्यते ॥

अत्रादौ बोधायनोक्तमत्रिकाण्डमुदाहरिष्यामः—

अत्रीन् व्याख्यास्याम अत्रयो भूरयस्थांदिस्थां दोगि पौष्टिका मौद्गुलयः सैपास्थप्रालाश्छागलाः तृणबिंदुर्भागंपथोमा[illegible]चो व्याळयः सांव[illegible]न-योकार्मर्यायनयोदाक्षिस्तैदेहाः गाणिपटयऔद्दाल-किः द्रोणभावा गौरिग्रीवयो गाविष्ठिराश्शिशुपा-लाः कृष्णात्रेयाः गौरात्रेयाः रक्तात्रेयाः नीलात्रे-याः* श्वेतात्रेयाः श्यामात्रेयाः महात्रेयो गात्रेया वैलेयास्सौभ्रेया वामरथीना वैत[illegible]यः कौण्डेया गोपवनाः कालापचया अनीलायनाः आनङ्गिर्मानङ्गिर्गौरङ्गिष्योरङ्गिस्सौरङ्गिपुष्पयः सैष्प-यः साकेतायनाः भारद्वाजनय इन्द्रातिथिरित्येतेऽत्र-यः तेषां त्र्यार्षेयः प्रवरो भवति । आत्रेयार्चनान-सश्यावाश्वेति होता, श्यावाश्ववदर्चनानसवदत्रिव-

---

*तृ—' अत्रयो भूरय[illegible] गिर्पौष्प कामांदुरियः शैवाच्छगलाश्चागला... भागंतकयोमातवकुचयो व्याळयस्सांभाव्यायणः कार्मार्यायणावेदाक्षिस्तैदेहा मणिः शान्तय औद्दालकिः...कृष्णात्रेयो ' इत्यादि.

दित्यध्वर्युः । वाग्भूतकानां त्र्यार्षेयः प्रवरो भवति-आत्रेयार्चनानसवाग्भूतकेति होता । वाग्भूतवदर्चनानसवदत्रिवदित्यध्वर्युः । गाविष्ठिराणां त्र्यार्षेयप्रवरः आत्रेयार्चनानसगाविष्ठिरेति होता । गविष्ठिरवदर्चनानसवदत्रिवदित्यध्वर्युः । मुद्गलाः श्याविसन्धिस्वर्णवाबोधाक्षगविष्ठिरावैतवाहास्सिरीषयश्शालिमनोगौरित्रौ गौरकयो वायवना इत्येते मुद्गलाः* तेषां त्र्यार्षेयप्रवरो भवति । आत्रेयार्चनानसपौर्वातिथेति होता, पूर्वातिथिवदर्चनानसवदत्रिवदित्यध्वर्युः । अत्रीणां सर्वेषामविवाहः ॥

इति बोधायनोक्तं अत्रिगोत्रकाण्डमुदाहृतम्.

---

अथापस्तम्बाद्युक्तमत्रिगोत्रकाण्डमुदाहरिष्यामः—

अथात्रीणां त्र्यार्षेयः आत्रेयार्चनानसश्यावाश्वेति । श्यावाश्ववदर्चनानसवदत्रिवदिति । अथ गविष्ठिराणां त्र्यार्षेयः आत्रेयार्चनानसगाविष्ठिरेति, गविष्ठिरवदर्चनानसवदत्रिवदिति । अथातिथीनां

---

*महात्रेयो हालेया बालेयालयो वामरथिनो वीतभावनाश्शौद्रेया स्तान्द्रेया...काराव-यश्शौभेया आनीषायणाः...द्वैरंगिसौरंगिपुष्पयश्शौखयः......भारद्वाजायन इन्द्रा....वाङ्भुतकानां....मुद्गलाः व्यानिसन्धिश्चूर्णबोधवाजकिवैततवश्लेषयः शालिमती बाहीगौरिवायो वा वायुपोशः.

वाहः। तेषां त्र्यार्षेयः प्रवरो भवति आत्रेयगाविष्ठि-रपौर्वातिथेति अत्रिवद्गविष्ठिरवत्पूर्वातिथिवत् ॥ पु-त्रिकापुत्रान्व्याख्यास्यामः—हादेयवावेयकौणेयवा-मरथ्यपुत्रिके*त्येषामविवाहः । तेषां त्र्यार्षेयप्रवरो भवति । आत्रेयवामरथ्यपौत्रिकेति अत्रिवद्वाम-रथ्यवत्पुत्रिकवत् ॥

इति कात्यानलौगाक्ष्युक्तमत्रिगोत्रकाण्डमुदाहृतम्.

---

अथाश्वलायनोक्तमत्रिगोत्रकाण्डमुदाहरिष्यामः—

आहाश्वलायनः—

अत्रीणामात्रेयार्चनानसगाविष्ठिरेति ॥ पूर्वाति-थीनां आत्रेयार्चनानस†पौर्वातिथेति ॥

इति आश्वलायनोक्तमत्रिगोत्रकाण्डम् ।

---

अथ मत्स्यपुराणोक्तमुदाहरिष्यामः—

मत्स्य उवाच—

---

*हालेयबालेयकौद्रेयशौभेयरथ्यपुत्रिके.

†अर्चनानसश्यावाश्वेति । गविष्ठिराणामात्रेयगाविष्ठिरपौर्वा.

अत्रिवंशसमुत्पन्ना[illegible] गोत्रकारान्निबोध मे ।
कर्म[illegible]यनिसांख्येयस्तथा सारायणाश्च ये ॥
उद्दालकश्शौनकार्णिरथो सौतवराश्च ये ।
गौर[illegible]विश्च कैरंजिरथो जैत्रायणाश्च ये ॥
आर्घपथा वामरथ्यो गौर्यन्यस्तृणबिन्दवः ।
कान[illegible]ह्वो ह्युरुग्रीविर्वैडालिश्शाकलायनिः ॥
तैलपश्च सवैलेय आत्रिगोणिपतस्तथा ।
प्रलगो भगपादश्च सौपुष्टिश्च महातपाः ।
छन्दो*गेयस्तथैतेषां त्र्यार्षेयः प्रवरो मतः ।
श्यावाश्वश्च तथाऽत्रिश्च तथा चैवार्चनासः ॥
परस्परमवैवावाह्या ऋषयः परिकीर्तिताः ।
दाक्षिर्बलिः पर्नलिश्च ऊर्णनाभिश्शिलार्दनिः ॥
बीजवपी शिरीषश्च मौञ्जकेशो गविष्ठिरः ॥
भलन्दनस्तथैतेषां त्र्यार्षेयाः प्रवरा मताः ।
अत्रिर्गविष्ठिरश्चैव तथा पूर्वातिथिस्स्मृतः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
अत्रेश्च पुत्रिकापुत्रानत ऊर्ध्वं निबोध मे ।
कालेयश्च सवालेयो वामरथ्वस्तथैव च ॥

---

*कार्मर्यायनिसांख्येयाः...शारायणाश्च...औद्दालकिश्शैलकार्णि...करवाश्च... गौरिभी-वश्च...अयंपन्थावासरथ्यो...कावजिह्वो...बडालिश्शकटायनिः...तैलपश्च...रात्रिगोणिपथः...अलन्दो भगपालश्च सौ पुष्टिश्च...छान्दो...

मैत्रेयश्चैव सौधेय*स्त्र्यार्षेयाः परिकीर्तिताः ॥
अत्रिश्च वामरथ्यश्च पौत्रिश्चैव महानृषिः ।
परस्परमवैवाह्या ऋषयः परि[illegible]र्तिताः ॥
इत्यत्रिवंशप्रभवास्तवोक्ता
महानुभावा नृप [illegible]त्रकाराः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

इति मत्स्यपुराणोक्ते प्रवराध्याये अत्रिवंशानुवर्णनं नामाध्यायः.

---

एतेषामत्रिगोत्राणां गणानां †परस्परमविवाहः । समानगोत्रत्वात् ॥ समानगोत्रत्वं च सप्तर्षेरत्रेस्सर्वेषु त्रिप्रवरेषु प्रवरणात् । द्व्यार्षेयसन्निपाताच्च । पुत्रिकापुत्राणामुभयोर्गोत्रयोरविवाहः, स्वस्वगणे च सुतरामविवाहः, समानप्रवरत्वाद्वचनाच्चेति । व्याख्यातान्यत्रिगोत्रकाण्डानि समाप्तानि ॥ अत्र श्लोकः—

समानमुनिबाहुल्यात्सगोत्रत्वाच्च नात्रयः ।
विवाहं कुर्वतेऽन्योन्यं नोभयोरपि पौत्रिकाः ॥

इति पुरुषोत्तमपण्डितविरचितायां प्रवरमञ्जर्यां
अत्रिगोत्रप्रवरकाण्डं व्याख्यातम्.

---

*सबालेयो वामदथ्यस्तथैव च । सौभ्रेयश्च वसौभ्रेया.

†एतेषामत्रिगोत्रजानां.

भृग्वङ्गिरोत्रिगोत्राणां प्रोक्ता प्रवरमञ्जरी ।
विश्वामित्रगणानां च ब्रुवे प्रवरमञ्जरीम् ॥

अत्र बोधायनोक्तं विश्वामित्रगोत्रकाण्डमुदाहरिष्यामः—

आह बोधायनः—

विश्वामित्रान्व्याख्यास्यामः कुशिकाः पार्णजङ्घाः पारक्या औदलिर्माणिर्बृहदग्निरार्लविराध्यहिरापदैय्यकामन्तका बद्धकयश्चिकिता लाभ[illegible]नाः शालङ्कायनाः साङ्कायनाः रौकागौरा स्सौगन्तयो यमह्वता आनभिन्ना स्तारकायणाश्चौवला जाबाल्यो याज्ञवल्क्या विदडानुवलयस्सौश्रय औपदहनय उदंपरिभाष्ठेयाश्श्यामेयाश्चैत्तेयास्तालावता *मयूरास्सौमित्याश्विवन्तवयस्स्येतन्तायना अनूनतन्तवो ये चान्ये वशब्दा बाभ्रव्यकालाया [illegible]त्सरय इत्येते †कुशिकाः तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रदैवरातौदलेति होता । उदलवद्देवरातवद्विश्वामित्रवदित्यध्वर्युः । लोहितारण्डकयश्चात्रवर्णायना व-

---

*पारिणजंघाः वालूक्या औदरि...रानर्चिराघाह्रिरापद्यापाः कामस्तकार्षब-कयस्सिकिणलामनाः सांगतायनाश्शालंकायना लौकांगारा यमदूता आनत्रिम्लातास्तारकायणाश्चौबाला...वितण्ड्याभुवनयः सौश्रयः औपदहनयं औदुम्बरिर्भ्राष्ट्रेयाश्श्यामेयाश्चैत्रेयास्सारावता.

†रास्सामत्याश्चित्रंतायनाश्श्वेतुन्दायना मनुजयो मातंगयो येचान्ये अन्तशब्दा बाभ्रव्यः कारवान्मुरयः इत्येते.

आयना वासय *इत्येते लोहितास्तेषां त्र्यार्षेयप्रवरो भवति। वैश्वामित्राष्टकलौहितेति होता। लोहित[illegible]द्विश्वामित्रवदित्यध्वर्युः । रौक्षकास्सोहहला रेवणाश्च †तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्ररौक्षरैवणेति होता। रेवणवद्रक्षवद्विश्वामित्रवदित्यध्वर्युः । वैश्वामित्रैदेवश्रवसदेवतरसमतिज्योतिज्यामकायनाः कालकायनिनस्तेषां त्र्यार्षेयः प्रवरः । वैश्वामित्रदैवश्रवसदैवतरसेति । देवतरसवद्देवश्रवसवद्विश्वामित्रवदित्यध्वर्युः । कतास्सैरिध्राः करभाया जायनाश्शिशिराः [illegible]ः पिण्डग्रीवा नारायणा राव्या इत्येते [illegible]तास्तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रकात्यात्कीलेति होता। अत्कीलवत्कतवद्विश्वामित्रवदित्यध्वर्युः । धनञ्जयाः कारिवातयः आश्वावतायनाः कौरव्यास्सैन्धवायनयः पुष्टाक्षा महाक्षा इत्येते धनञ्जयास्तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रमाधुच्छन्दसधानञ्जयेति होता। धनञ्जयवन्मधुच्छन्दोवद्विश्वामित्रवदित्यध्वर्युः । अजायनानां त्र्यार्षेयः प्रवरः । वैश्वामित्रमा-

---

*रण्डकयश्चाक्रवर्मायणा वावायना वाशयः.

†तौक्षकाश्चौहुहला मालाश्चेति.

**अथाघमर्षणाः कुशिकास्तेषां त्र्यार्षेयः—वैश्वामित्राघमर्षणकौशिकेति । कुशिकवदघमर्षणवद्विश्वामित्रवदिति ॥**[1]

इत्यापस्तम्बाद्युक्तं विश्वामित्रगोत्रकाण्डमुदाहृतम्.

---

अथ कात्यायनलोगाक्षिप्रणीतं विश्वामित्रगोत्रकाण्डमुदाहरिष्यामः—

**विश्वामित्रान्व्याख्यास्यामो विश्वामित्रदेवराताश्चैकितगालवतान्तकैः कुशिका वर्तण्डश्च शलंकुवाधो आश्वतायनाश्श्यामायना याज्ञवल्क्या जाबालास्सैन्धुवायनाः बाभ्रव्याः प्ययश्चकार्षिसम्मत्याः अथ सौश्रुताः आलोप्यापगहनयः पापेदिरयः पार्णयः क्षरपापादोलीत्येषा[2]मेवाविवाहः । तेषां त्र्या-**

---

[1] "अथ विश्वा...मनुतंत्वीराकिवारकियाज्ञवल्क्योलूक...शालिशालावतशालंकायनकालववाः...अथ सौमतकामकायनानां...विश्वामित्रवत् । अथाज्यानां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसाज्येति । अजवन्मधुच्छन्दोवद्विश्वामित्रवदिति । अथ माधुच्छन्दसा एव धनञ्जयाः-तेषां त्र्यार्षेयो वश्वामित्रमाधुच्छन्दसधानञ्जयेति । धनञ्जयवन्मधुच्छन्दोवद्विश्वामित्रवदिति । अथाष्टका लोहिताः-तेषां द्व्यार्षेयो वैश्वामित्राष्टकेति । अष्टकवद्विश्वामित्रवदिति । अथ पूरणाः परिधापयन्त्यः तेषां द्व्यार्षेयो वैश्वामित्रपौरणेति । पूरणवद्विश्वामित्रवदिति" "अथ कात्यायनानां" इत्यतः प्राक् पाठः शृं—कोशे ॥

[2] व्ययश्च कार्ष्णिसंकृत्याः...ओलोप्या ओपगहनयः पार्योदरयः पार्णयः भाः पाजाला इत्येतेषा॰

र्षेयः प्रवरो भवति। वैश्वामित्रदैवरातौदलेति। उदलव-द्देवरातवद्विश्वामित्रवत् । देवरातदेवश्रवस देवतरसः सौमुककौमुहायनाः कुशिकास्ते इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति वैश्वामित्रदैवश्रवसदेवतरसेति । विश्वामिवद्देवश्रवोवद्देवतरोवदिति। अथाजा माधुच्छन्दसो मार्गमित्ययः कुशिका [1]इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रमाधुच्छन्दसाज्येति । विश्वामित्रवन्मधुच्छन्दोवदजवदिति । अथ कमदकधनंजयपरिकूटपार्थिवपाणिनीकौशिकाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रमाधुच्छन्दसधानंजयेति । विश्वामित्रवन्मधुच्छन्दोवद्धनंजयवदिति । अथाश्मरथ्याः कामु[illegible]निनो बन्धुलाः कुशिका इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्राश्मरथ्यवाधूलेति । वधूलव[2]दश्मरथ्यवद्विश्वामित्रवत् । अथाघमर्षणाः कौशिकाः तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्राघमर्षणकौशिकेति । विश्वामित्रवदघमर्षणवत्कुशिकवदिति। पूरणाः पारिधावन्त इत्येतेषामविवाहः । तेषां द्व्या-

---

[1] अथाज्यमाधु.......मित्रेय.

[2] बान्धूलेति । बन्धूलवत.

र्षेयः प्रवरः वैश्वामित्रपौरणेति । पूरणवद्विश्वामित्रवदिति । लोहिता अष्टका इत्येतेषामविवाहस्तेषां त्र्यर्षेयः प्रवरः । वैश्वामित्रलौहिताष्टकेति । अष्टकवल्लोहितवद्विश्वामित्रवत् । अथोदुम्बारिशैशिलीढैकाकायनितैयनिस्त्रैकायनिताक्ष्यार्यणितारुष्यायणिकात्यायनिकारिलादिलावकीनां सालङ्कायनमौजहायनाः कता इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्रकात्यात्कीलेति अत्कीलवत्कतवद्विश्वामित्रवत् ॥ त्रीणि रैवणकुलानि भवन्ति । अथ कास्वैतरत्यनखोद्वहयश्वेत्येते[1]षामविवाहः ॥ तेषां त्र्यार्षेयप्रवरः । वैश्वामित्रगाधिनरैवणेति । रेवणवद्गाधिनवद्विश्वामित्रवत् ॥

इति लोगाक्षिप्रणीतं विश्वामित्रकाण्डमुदाहृतं, न कात्यायनप्रणीतं, तयोरध्वर्युप्रवरेषु सर्वेषु विशेषज्ञापनार्थम् ॥

---

अथाश्वलायनोक्तं विश्वामित्रगोत्रकाण्डमुदाहरिष्यामः—

चिकितगालवकालववमवतरुकुशिकानां वैश्वामित्रदेवरातौदलेति ॥ श्रौमत[2] कामकायनानां वै-

---

[1] शैशिरि...स्तैंकायनिस्त्रैकायनि...तार्ष्यायणि...कारीलादि...त्रीणि रैवरैवणकुलानि कुलानि भवन्ति । अथ काश्वेतरेणवाश्वेतहर्यश्वेत्येते.

[2] कालवमनुतन्तु...सौमत.

श्वामित्रदैवश्रवसदैवतरसेति । धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति ॥ अजानां वैश्वामित्रमाधुच्छन्दसाज्येति । रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति ॥ अष्टकानां वैश्वामित्रमाधुच्छन्दसाष्टकेति । पूरणपरिधापयन्तानां वैश्वामित्रदैवरातपौरणेति । कतानां वैश्वामित्रकात्यात्कीलेति । अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । रेणूनां वैश्वामित्रगाधिनरैणवेति । शालंकायनशालाक्षलोहिताक्षलोहितजह्नूनां वैश्वामित्रशालंकायनकौशिकेति ॥

इत्याश्वलायनोक्तं विश्वामित्रप्रवरकाण्डमुदाहृतम्.

---

अथ मत्स्यपुराणोक्तं विश्वामित्रगोत्रप्रवरकाण्डमुदाहरिष्यामः—

मत्स्य उवाच—

अत्रेरेवापरं वंशं तव वक्ष्यामि पार्थिव ।
अत्रेस्सोमस्सुतश्श्रीमान् तस्य वंशोद्भवो नृपः ॥
विश्वामित्रस्सुतपसा ब्राह्मण्यं समवाप्तवान् ।
तस्य वंशमहं वक्ष्ये तन्मे निगदतश्शृणु ॥
विश्वामित्रो देवरातस्तथा वैकृतिगालवः ।
वतण्डश्च शलङ्कश्च अथो आश्वा वृताग्नः ॥

श्यामायना याज्ञवल्क्या [illegible]बालास्सैन्धवायनाः।
बाभ्रव्यायश्च कारीषी संसृत्या अथ संसृताः ॥
औलोप्या ओपगवयः पार्योदरयपार्षयः ।
क्षर पापाभलीभावास्साधिता वास्तु कौशिकाः॥
त्र्यार्षेयप्रवरस्तेषां सर्वेषां परिकीर्तितः ।
विश्वामित्रो देवरात उद्दालश्च महातपाः[1] ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
विश्वामित्रस्तथाऽजाश्वो मधुच्छन्दस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
धनञ्जयः कर्मधयः परिकूटस्सपार्थिवः ॥
पाणिनिश्च त्र्यार्षेयास्सर्वे ते परिकीर्तिताः ।
विश्वामित्रो मधुच्छन्दास्तथा चैवाघमर्षणः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
कामल[illegible]दिश्चैव आश्मरथ्यस्तथैव च ॥
माधुलाः कौशिकास्तेषां त्र्यार्षेयः प्रवरो मतः।
विश्वामित्र[illegible]श्मरथ्यो बन्धुलिश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः* ।
विश्वामित्रो लोहितश्च अष्टकः पूरणस्तथा ॥
विश्वामित्रः पूरणश्च तयोर्द्वौ प्रवरौ स्मृतौ ।

---

१७ डश्च लतांकुश्च...कारिषा संसृत्या...अलिप्या औपदहनयः...हरपापा भलाभा॰
वाः...उदलश्च महातपाः ।

परस्परमवैवाह्याः पूरणाश्च परस्परम् ॥*
लोहिता अष्टकाश्चैषां त्र्यार्षेयः परिकीर्तितः ।
विश्वामित्रो लोहितश्च अष्टकश्च महातपाः ॥
अष्टका लोहितैर्नित्यमवैवाह्याः परस्परम् ।
उदवेणुः कथकश्च ऋषिश्चोद्दालकिस्तथा ॥
त्र्यार्षेयोभिमतस्तेषां सर्वेषां प्रवरश्शुभः ।
ऋणवान्ग्रथिनश्चैव[1] विश्वामित्रस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
उदुम्बरिस्सैसवटिः इषिस्ताक्ष्यायणिस्तथा ॥
कात्यायनिः करीरामिशालङ्कायनिलावकाः ।
मौ[illegible]यनिश्च भगवान् त्र्यार्षेयः परिकीर्तितः ॥
सतिस्तथासुविद्धारि[2] विश्वामित्रस्तथैव च ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
एते तवोक्ताः कुशिका नरेन्द्र
महानुभावास्सततं द्विजेन्द्राः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

इति मत्स्यपुराणे विश्वामित्रगोत्रप्रवराध्यायः.

---

*एतच्चिह्नमध्यपतितग्रन्थस्थाने 'पारिधापयन्तो न वैवाह्याः पूरणाश्च परस्परस्परम्' इत्येव पठ्यते शृ-कोशे.

[1] रुणवा गाधिनश्चैव.

[2] उदुम्बरश्शैशिरश्च ऋषिः...लावकिः ।...श्वसनिश्च सुविद्यारिः.

एतानि सूत्रकाण्डानि यदर्थमृषयोब्रुवन् ।
विवाहगोत्रप्रवरान् तानर्थान्ब्रूमहे वयम् ॥

अत्रोक्तेषु विश्वामित्रगणेषु ये देवरातादयः परिगणिताः तेषां सर्वेषां परस्परमविवाहः; स्वेस्वे गणे तु सुतरामविवाहः, समानप्रवरत्वात् ॥ इति व्याख्यातानि विश्वामित्रप्रवरकाण्डानि ॥

अत्र श्लोकः—

यावतां प्रवरेष्वेको विश्वामित्रोनुवर्तते ।
न तावतां सगोत्रत्वाद्विवाहोस्ति परस्परम् ॥

इति पुरुषोत्तमपण्डितविरचितायां प्रवरमञ्जर्यां
विश्वामित्रकाण्डं समाप्तम्.

---

अथेदानीं कश्यपगोत्रप्रवरकाण्डमुदाहरिष्यामः—

अथ कश्यपगोत्राणामखण्डं काण्डमुच्यते ।
पिण्डितैः पण्डितैर्विद्यामण्डितैश्श्रूयतामिदम् ॥

अत्रादौ बोधायनोक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

**कश्यपान् व्याख्यास्यामः । कश्यपाश्वाङ्गिरयो मठरा ऐतिशायना आभूत्या वैशिप्रा धूम्रायणाः सौम्या अर्म्यायणास्त्रौववृक्षा राम्रायणाः पैन्धुकयः प्रावर्या हृद्रोगाश्श्राम्भयाः पाश्वायनिकाः मेषान्तकिस्सामसयो माधसरा पयस्सौधवयस्सायम्या आसुरायणाश्छगव्यास्सौनद्यस्स्थौलकेशयोवार्धकय**

औपव्या लाक्षणाः क्रौष्टजीवनयस्स्वाद्रायणा रोहितायना मितकुम्भाः पिङ्गाक्षय औढलयः मारयणाः पञ्च च वैकर्णेयाः कौशितकयाः धूमलक्ष्मणयः सुरागौरीवायनाः महावक्रेयाः पैठीनस्याः पानस्याः विषागणाः दाक्षमाणयो भालदंताः शाश्वमित्रैया हरित्या जारमात्स्योरमाणिसाविश्रवसोवैशंपायनाः स्वैरंकिकासलयः उच्छ्रयांदमार्जलाय-नाः कांसला॰नाः देवोहोतसुचयः खरेभायस्थूणा भागुरयः पाथिकाया गोमायावा हिरण्यवायाग्निदेविस्तथासौर्यास्सुसला आविश्रेण्या उत्तरतोगण्डे मादलामान्विता वैकर्णयस्थूलभिदव* इत्येते निध्रुवाः कश्यपास्तेषां त्र्यार्षेयप्रवरः काश्यपावत्सारनैध्रुवेति होता निध्रुववदवत्सारवत्कश्यपवदित्यध्व-

---

*कश्यपाश्छागल्योवठरा...आहूत्या...धूमा धूम्रायणाः धौम्या दार्म्यायणाः ओधाजिराम्रायणाः पैंवकयः प्रावार्या हृद्रोगयः कारिण्याताः पांबामिकाः मोषीतकिः सांशयो माषशरावयस्सौपस्सौतवयः सामथ्या आसुरायणाश्छागव्यास्सौनव्या स्थौलकेशयो बाधकय औपव्या लाक्षाण्याः क्रोष्टाजविनयः खार्दमायनाः गांगायनाः रोहितायनामितकुम्भाः पिंगलाक्षयः ओडलयः नारायणा एव च वैकर्णेयाः कौषीतकेयाः धूमलक्ष्मणयः सुरागौरिवायणाः विमथ्यासाग्निशर्मायणाः औक्षायनयः कांबरोदयः देववाता वैदोन्ता वेलामहाचक्रेयाः पैठीनसाः पानध्याः वृषगणाः दीक्षमाणयो भालंदनयः शांकमित्रेया हरिम्याः पांचाला राजमान्यो वार्षग्वाणिसाविश्रवसो वैशंपायनाः स्तैरंकिकांसलयः औक्षायनिर्माजायनाः कांसायना देवोहोदशुचयः...पाथिकार्या गोमयाताहिरण्यपापा अग्निदेविस्तथा...मुसला...तोखण्डमाना मन्त्रवता वैरणयश्शूलभिन्दवः.

र्युः । रेभाणां त्र्यार्षेयः प्रवरः—काश्यपावत्साररैभेति होता।रेभवदवत्सारवत्कश्यपवदित्यध्वर्युः॥२ शाण्डिलाः कौहलाः पायकाः पायिकाः औदमेघास्सौदनवाः सावचसः कारेयः कौकंठयः स्तैक्षिमहाकयो माहोदकयः कोषयः मौंजायनाः जाणवंशाः खार्वमानया गांगयना वात्सभालयः गोभिलाः वेदायनाः वाश्ययनाः बहूदरयो भागुरिः खार्दतीमुखा हिरण्यबाहुस्तैदेहाः गोमूत्राः वा यशठाः* जानंधरिर्जालंधरिधन्वंतरिरित्येते शाण्डिलास्तेषां त्र्यार्षेयः प्रवरः—काश्यपावत्सारशाण्डिल्येति होता। काश्यपावत्सारदैवलेति वा । काश्यपावत्सारासितेति वा । शाण्डिल्यासितदैवलेति वा । शाण्डिलवदवत्सारवत्कश्यपवदित्यध्वर्युः । देवलवदवत्सारवत्कश्यपवदिति वा। असितवदवत्सारवत्कश्यपवदिति वा । देवलवदसितवच्छण्डिलवदिति वा । लौगाक्षयो दार्भायणा मैत्रवादिर्वैहकालेयः कार्पुटिस्तथा कलयश्च कंसपात्रश्च भालकायनिपरस्ताविरोदकिकौनामिसौतयः सैति-

---

*...पार्थका औदमेघयः सैदालवत्यावयसः काल्याः काकुण्डेयः ष्टैषकयो माहाकायो महौजकयः कोश्रायनिः मार्जायनाः कामशयो दाणवत्साः खार्दमायणाः गांगायनाः मात्स्यबाल्याः गोबिलाः...वात्स्यायनयो बहूदरयो भागुरिर्गार्दभिः मत्ताहिरण्यबाहिस्तैदेहाः वाक्वशुण्ठाः.

किष्टिभेरोनिष्टिष्टैषिकिसोसुकिश्चैरन्ध्रिश्चोप्यणायोध- कालकिकलो लौगाक्षयो वाचया जया[1] इत्येते लौ- गाक्षयः अहर्वसिष्ठा नक्तंकश्यपाः । तेषां त्र्यार्षेयः प्रवरः—काश्यपावत्सारवासिष्ठेति होता । वसिष्ठवद- वत्सारवत्कश्यपवदित्यध्वर्युः । वासिष्ठावत्सारका- श्यपेति होता । कश्यपवदवत्सारवद्वसिष्ठवदित्यध्व- र्युः इति वा । एतेषामविवाहः ॥

इति बोधायनोक्तं कश्यपगोत्रकाण्डमुदाहृतम्.

---

अथापस्तम्बाद्युक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

अथ कश्यपानां त्र्यार्षेयः काश्यपावत्सारनैध्रुवेति निध्रुववदवत्सारवत्कश्यपवदिति । अथ रेभाणां त्र्या- र्षेयः काश्यपावत्साररैभेति रेभवदवत्सारवत्कश्य- पवदिति । अथ शण्डिलानां द्व्यार्षेयो दैवलासि- तेति असितवद्देवलवदिति । त्र्यार्षेयमु हैके काश्यप- दैवलासितेति । असितवद्देवलवत्कश्यपवदिति । द्व्यार्षेयास्त्वेवं न्यायेनेति ॥

---

[1] चामैत्र:काहिर्वेधा काळेय:...तथा त्रयश्च कांसपत्राश्च वालुकायनिसमस्ताविभेदकि: सैनामिसैतथ: सेलगि: साम्भरणिरारिष्टैषमिसासुणिश्चैरण्डसुनिश्चोलवण योजांकालकिकलोकाक्षयो जाबाल्य:.

'द्व्यार्षेयस्त्वेवं न्यायेन' इत्येतत्सूत्रमेके व्याचक्षते—द्व्यार्षेया एव सर्वे शण्डिला भवितुमर्हन्ति न त्र्यार्षेया इति । तदनुपपन्नम्, 'अत्र्यार्षेयस्य हानं स्यादधिकारात्'* इति जैमिनीयन्यायविरोधात् । तस्मादयमर्थः । द्व्यार्षेयास्तु एवमनेन प्रकारेण त्र्यार्षेया एव न्यायेन भवितुमर्हन्ति, न शण्डिला एव । तस्मादष्टकानां लोहितानां द्व्यार्षेयाणां त्र्यार्षेयत्वमेव द्रष्टव्यमिति[1] ॥

इत्यापस्तम्बाद्युक्तं काश्यपगोत्रकाण्डमुदाहृतम्.

---

अथ कात्यायनलौगाक्षिप्रणीतं काश्यपगोत्रकाण्डमुदाहरिष्यामः—

**कश्यपान्व्याख्यास्यामः—आत्रायणा विषगणा मौषकरतिकायना औषप्रतिमासरा गोजावीरधरा वृषिसारा हरेयाः कैरञ्जाशवैतैता आसुरायणा मातृत्या वैवकयः प्रैकयो भौवनाः पैठीनसास्सधवाः प्रगाधाह्वगायका देवपातास्सोमयागा अथोपश्वाया-श्येदुदगव्यायनाश्शत्रुहयो ह्व्योगाः काचायनाश्चक्र-धर्मी महाचक्रधर्मी श्रैययणा हार्करथो दक्षपाणयो हास्तिदासिवात्स्यपाणिह्वास्तलायनान्यकृतवौमूल-**

---

* मी-सू. ६-१-४१.

[1]इदं व्याख्यानं कपर्दिभाष्यगतम् । "...लोहितानां वैश्वामित्रलौहिताष्टकेति स्मृत्यन्तरस्य विद्यमानत्वात् त्र्यार्षेयत्वमेव स्यात् । पूरणानां पारिधापयन्तीनां वैश्वामित्रदैवरातपौराणेतिस्मृतेस्त्र्यार्षेयत्वमेव । तत्र सर्वेषां शण्डिलानां ऋषिबाहुल्यादविवाहः । विश्वामित्रपक्षेऽपि आज्यानां धनञ्जयानां चाविवाहः । अनुक्तानां सहविवाहः ।" इत्यधिकं दृश्यते कपर्दिभाष्यकोशे.

धूम्रायणा स्वबभृस्वाथो आश्ववातापनाः कौसीद- काः खगादा अथो आग्निशर्मायणाश्च ये मौहूज्याः कैकशयः काश्वहायनो द्विवायनो हस्त्यकश्यपसा- नुश्रुतहरितायनमाङ्गसोमभूवा इत्ये*तेषामविवा- हः । तेषां त्र्यार्षेयप्रवरो भवति काश्यपावत्सारनैध्रु- वेति कश्यपवदवत्सारवन्निध्रुववदिति ॥ शाश्वमित्रयो रैभा इत्येषामविवाहः ॥ तेषां त्र्यार्षेयप्रवरो भवति काश्यपावत्साररैभेति । कश्यपवदवत्सारवद्रेभव- दिति ॥ संपवाचलुभिश्चोभे उपलोध लम्बबहुमि- डोहैर्युरः पर्या मौजीमो गर्दबीमुखो हिरण्यबाहुश्चैर- नाभः केशीलकोकिलौ कुहलो वृकखण्डश्चेत्येते देव- जातपाः । उदमेघतृणबिन्दुसुदानुकौवलयश्चोत्तरश्च सुकेतुश्चेत्येते कौरडजाः शाकिला वैदानवसौदानवपै- ल्यलायूपरिवारीत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरः । काश्यपासितदैवलेति । शाण्डिलासितदै- वलेति वा । कश्यपवदसितवद्देवलवदिति शण्डि-

---

*आग्रायणा वृषगणा मपक्किकायना ओषप्रतिमासरश्च गोजारिटिवीरध्वरा- वणिशालावनेयाः कम्रआश्वेकेता असुरायणा माद्रव्या वैधुलकयः स्वैक- यो...सैन्धवास्त्वैभ्रका आह्लगायका देवयाता सोमयाता अथो षष्ठाया- वणश्चेद्गव्या...काचकायनाः...त्रैषायगा हाकिरयो दाक्षपागयो...फलमूल- धूम्रायणारश्वतश्चाथो आश्वलायनाः कौषीतकाः खगादा आश्वो वाग्नि- शर्मायणाश्च ये माण्डव्याः कैकयशः काष्ठकायनो जहीयनो हस्त्य...सौ- गभुवा इत्ये.

लवदासितवद्देवलवदिति वा ॥ आनडायोप्यकुलय-
श्शाकलयो रावपालयस्सैकीराजवाहिश्च सौरान्ध्रिरा-
जसैवकिसासुचिकापुटापिङ्गाक्षिलौगाक्षिसरतव इ-
त्ये*ते प्रातर्वासिष्ठा नक्तं कश्यपा इत्येतेषामविवाह-
स्तेषां त्र्यार्षेयः प्रवरो भवति कास्यपावत्सारवासि-
ष्ठेति । वसिष्ठवदवत्सारवत्कश्यपवदिति ॥

इति कात्यायनलौगाक्षिप्रणीतं कश्यगोत्रप्रवरकाण्डमुदाहृतम्.

---

अथाश्वलायनोक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

आहाश्वलायनः—

काश्यपानां काश्यपावत्सारासितेति ॥ नैध्रुवाणां
काश्यपावत्सारनैध्रुवेति ॥ रेभाणां काश्यपावत्सा-
ररैभेति ॥ शाण्डिलानां शाण्डिलासितदैवलेति ।
काश्यपासितदैवलेति वा ॥

इत्याश्वलायनोक्तं कश्यपगोत्रकाण्डमुद्धृतम्.

---

*जलम्ब घह्मिर्घोहिः पुरुषयो माचमम्मो गर्दभामुखो हिरण्यबाहुर्श्वैरभानुः जाके-
लकोकिलाकहनावृकखण्डश्चेत्येते देवरातयः उदमेघतृणबिन्दुसुदानुकैबलश्चै...
कौरद्वाजाः शम्बिला...वैप्युलायूपरीत्रिरीत्ये...आनष्टयोफाकुलयश्शाक्तयो रा-
वफालयः सैकीराजवाहश्च सैरान्भ्रिराजस्तवाकि...सरभव इत्ये.

धूम्रायणा स्वबभृस्वाथो आश्ववातापनाः कौसीदकाः खगादा अथो आग्निशर्मायणाश्च ये मौहूज्याः कैकशयः काश्वहायनो ह्विवायनो हस्त्यकश्यपसानुश्रुतहरितायनमाङ्गसोमभूवा इत्ये*तेषामविवाहः । तेषां त्र्यार्षेयप्रवरो भवति काश्यपावत्सारनैध्रुवेति कश्यपवदवत्सारवन्निध्रुववदिति ॥ शाश्वमित्रयो रैभा इत्येषामविवाहः ॥ तेषां त्र्यार्षेयप्रवरो भवति काश्यपावत्साररैभेति । कश्यपवदवत्सारवद्रैभवदिति ॥ संपवाचलुभिश्चोभे उपलोधजलम्बबहुमिडोहैर्युरः पर्या मौजीमो गर्दवीमुखो हिरण्यबाहुश्चैरनाभः केशोलकोकिलौ कुहलो वृकखण्डश्चेत्येते देवजातपाः । उदमेघतृणबिन्दुसुदानुकौवलयश्चोत्तरश्च सुकेतुश्चेत्येते कौरडजाः शाकिला वैदानवसौदानवपैल्यलायूपरिवारीत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरः । काश्यपासितदैवलेति । शाण्डिलासितदैवलेति वा । कश्यपवदसितवद्देवलवदिति शाण्डि-

---

*आग्रायणा वृषगणा मपक्किकायना ओषप्रतिमासरश्च गोजारिटिवीरध्वरावणिशालावनेयाः काम्रआश्वेकेता अमूरायणा माद्रव्या वैधुलकयः स्वैकयो...सैन्धवास्त्वैध्रका आह्लगायका देवयाता सोमयाता अथो पश्चायावणश्चेद्गव्या...काचकायनाः...त्रैपायणा हाकिरयो दाक्षपागयो...फलमूलधूम्रायणाश्वतश्चाथो आश्वलायनाः कौषीतकाः खगादा आश्वो वाग्मिशर्मायणाश्च ये माण्डव्याः कैकयशः काष्ठकायनो जह्रीयनो हस्त्य...सौगभुवा इत्ये.

लवदसितवद्देवलवदिति वा ॥ आनष्टायोप्यकुलय-
श्शाकलयो रावपालयस्सैकीराजवाहिश्वसौरन्ध्रिरा-
जसैवकिसासुचिकापुटपिङ्गाक्षिलौगाक्षिसरतव इ-
त्ये*ते प्रातर्वसिष्ठा नक्तं कश्यपा इत्येतेषामविवाह-
स्तेषां त्र्यार्षेयः प्रवरो भवति काश्यपावत्सारवासि-
ष्ठेति । वसिष्ठवदवत्सारवत्कश्यपवदिति ॥

इति कात्यायनलौगाक्षिप्रणीतं कश्यगोत्रप्रवरकाण्डमुदाहृतम्.

---

अथाश्वलायनोक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

आहाश्वलायनः—

काश्यपानां काश्यपावत्सारासितेति ॥ नैध्रुवाणां
काश्यपावत्सारनैध्रुवेति ॥ रेभाणां काश्यपावत्सा-
ररैभेति ॥ शाण्डिलानां शाण्डिलासितदैवलेति ।
काश्यपासितदैवलेति वा ॥

इत्याश्वलायनोक्तं कश्यपगोत्रकाण्डमुद्धृतम्.

---

*जलम्ब बहुभिर्धोहिः पुरुषयो माचमम्मो गर्दभामुखो हिरण्यबाहुश्चिरभानुः जाके-
लकोकिलाकहनात्रृकखण्डश्चेत्येते देवरातयः उदमेघतृणबिन्दुसुदानुकैबलश्चो...
कौरद्वाजाः शम्बिला...पैप्युलायूपरीवरीत्ये...आनष्टयोफाकुलयश्शाक्तयो रा-
वफालयः सैकीराजवाहश्च सैरन्ध्रिराजस्तबाकि...सरभव इत्ये.

अथ मत्स्यपुराणोक्तं कश्यपगोत्रकाण्डमुदाहरिष्यामः—

मत्स्य उवाच—

मरीचेः कश्यपः पुत्रः कश्यपस्य महाकुले ।
गोत्रकारानृषीन्वक्ष्ये तेषां नामानि मे शृणु ॥
आग्रायणा विषगणा मेषाविरिरिटिकायनाः ।
भवनन्दी महाचक्री दाक्षपायण एव च ॥
ग्राष्टेयना ह्याकिरयो हस्तिदस्तु तथैव च ।
वात्स्यायनानि कृतजा ह्याश्वलायनिनस्तथा ॥
प्राग्रायणः पैलमौलिराश्ववातायनस्तथा ।
कौषीतकास्स्वावतका अग्निशर्मायणिश्च ये ॥
मेषपाः कैकरसपास्तथा चैव सुचभ्रयः ।
यौलयो ज्ञानराधश्च अज्ञावस्सर्व एव तु ॥
श्यामोदरा वैवशपास्तथा वैलत्वलायनः ।
कष्टायनाश्च मारीचा आजिहायनहास्तिकाः ॥
वैकर्णेयाः कश्यपाश्च सास्सिसाहारितायनाः ।
मतंससावभृगवस्त्र्यार्षेयाः परिकीर्तिताः ॥
वत्सरः कश्यपश्चैव निध्रुवश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
नैहास्यसांख्यमित्राश्च त्र्यार्षेयाः परिकीर्तिताः ।
वत्सरः कश्यपश्चैव निध्रुवश्च महातपाः ॥

परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
अतः परं प्रवक्ष्यामि ह्यामुष्यायणगोत्रजान् ॥
अनुष्ठेयाभिकुरयस्तानयो राजवन्नयः ।
सैरुषी रोदबर्हिश्च सैरन्ध्री रूपवत्सकिः ॥
साम्राकिस्साट्टपिङ्गाक्षिस्सजाताम्बिस्तथैव च ।
दिवा वसिष्ठा इत्येते नक्तं ज्ञेयाश्च कश्यपाः ॥
त्र्यार्षेयश्च तथैतेषां प्रवरः परिकीर्तितः ।
कश्यपो वत्सरश्चैव वसिष्ठश्च महातपाः* ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
संपातिश्च बलिश्चोभौ पिप्पलोथ जलन्धरः ॥
सुंजोतमानः पर्वश्च कर्दमो गर्दभीमुखः ।
हिरण्यबाहुकैरातावुभौ कश्यपशोभनौ ॥
कुलहो वृषखण्डश्च मृगकेतुस्तथोत्तरः ।
तदपासस्ववसवोमहाकैरलयाश्च ये ॥
शाण्डिला वैदानवसोदनवो वेदपातयः ।

---

*आम्रायणा वृषगणा मेषकिरिटि...दाक्षमाणयः...श्रेष्ठयवाह्यकिरयो हास्तिदासिस्त-थैव च । वात्सतालमलिक्कद्रुत्सश्वलायानिनस्तथा ।...राश्वबाणायनिस्तथा । कौशान्तका आश्ववीता...। मौषेरपि कैकिपया...शुचिश्रयः । पैलयो... अम्रावस्सर्वं...। श्यामाताशिशियश्चैव तथा ये शाद्वलायनः । कष्टायनाश्च नारी वा...विकर्णेयाः...शासिसा...गर्तससाव...अवत्सारः कश्यपश्च... आनुष्टयो भाकुरयः तातकोपाजवन्नयः । सौपत्रिरोदवाहिश्च...रोधसाव-किः । साम्राक्षिस्साट्ट...काश्यपावत्सारश्च...

पिप्पलादिस्तौवरिव ऋषिर्वा परिकीर्तिताः ॥
त्र्यार्षेयोभिमतश्चैषां सर्वेषां प्रवरश्शुभः ।
असितो देवलश्चैव कश्यपश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ।
ऋषिप्रधानस्य तु कश्यपस्य
दाक्षायणीभिस्सकलं प्रसूतम् ।*
जगत्समग्रं मनुसिंहमुख्य
किं ते प्रवक्ष्याम्यहमुत्तरं नृप ॥

इति मत्स्यपुराणे प्रवरानुकीर्तने कश्यपगोत्रप्रवराध्यायः.

---

एतेषु काण्डेषूक्तानां निध्रुवरेभशाण्डिल्लैगाक्षिगणानां परस्परमविवाहः, सगोत्रत्वात् । सगोत्रत्वं च, सर्वेषु प्रवरेषु व्रीयमाणतया सत्तया च कश्यपानुवृत्तेः । त्र्यार्षेयप्रवरेषु द्व्यार्षेयसन्निपाताच्च । लौगाक्षीणां तु द्विगोत्रत्वात्कश्यपैस्सवैर्वासिष्ठैश्चाविवाहः । इह शाण्डिलानां चत्वारः प्रवरा विकल्पेन बोधायनोक्ताः । काश्यपावत्सारशाण्डिल्येति प्रथमः । काश्यपावत्सारदैवलेति द्वितीयः । काश्यपावत्सारासितेति तृतीयः । शाण्डिलासितदैवतेति चतुर्थः । तथा-

*संपातिश्च बलिश्चाथ...सुजोघपूर्वः पूर्वश्च गर्दभिर्गर्दभामुखः । कुलिजो वृषगण्डश्च मृगेतुश्च तथोत्तरम् । तदपोश्चस्तवत्सोममहः कोरणयाश्च ये... वेदयातवः । पैप्पलादिश्चोदुम्बरीपतऋषिर्वा...ऋषिप्रधानं त्वथ कश्यपस्य... प्रसूते ।

ऽऽपस्तम्बादिभिरुक्तौ विकल्पेन द्वौ प्रवरौ। देवलासितेति प्रथमः। काश्यपदैवलेति द्वितीयः। तत्रैतेषु प्रवरेषु षट्सु पञ्च मन्त्रदृशः प्रतीयन्ते—कश्यपावत्सारशाण्डिलदेवलासिताः। ततः शाण्डिलानां पञ्चार्षेयः प्रवरो वक्तव्यः काश्यपावत्सारशाण्डिल्यदैवलासितेति, 'यथर्षि मन्त्रकृतो वृणीते' 'यावन्तो वा मन्त्रदृशो वृणीते' इति श्रुतिभ्याम्। तथा 'यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि' इत्युक्त्वा 'यावन्तो वा मन्त्रकृतस्तावन्तो वृणीते' इति कात्यायनवचनाच्च। तथाऽपि पञ्चार्षेयप्रवरः केनापि सूत्रकारेण नोपदिष्टः। तस्मात्समानायामपि शाण्डिलसमाख्यायां वंशभेदकल्पनया व्यवस्थिता एते विकल्पा द्रष्टव्याः। वंशैक्ये सति पञ्चार्षेयवरणं प्रसज्यत इत्युक्तम्। तस्माद्यथोक्त एवार्थः॥

शुङ्गशैशिरिरित्येको द्विगोत्रः प्रोच्यते मुनिः।
तद्वंशप्रभवाः प्रोक्ताश्शुङ्गशैशिरयो यथा॥
तथैकोहर्वसिष्ठत्वं नक्तंकश्यपतां गतः।
मुनिर्द्विगोत्रस्तद्वंश्या लोगाक्ष्याद्या द्विगोत्रजाः॥
द्वयोरपत्यसामान्यादग्नेर्वरणमेतयोः।
विकल्पेनाहुराचार्या विकल्पो नान्यथा भवेत्॥
प्रथमः प्रवरः प्रोक्तः पितुरुत्पादकस्य यः।
प्रतिग्रहीतुः पाश्चात्यश्शुङ्गशैशिरि[री]णां यथा॥

इति श्रीपुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां
कश्यपगोत्रप्रवरकाण्डानि व्याख्यातानि.

---

अथ वसिष्ठगोत्रप्रवरकाण्डं व्याख्यास्यामः—
अतः परं वसिष्ठानां गोत्रप्रवरविस्तरम्।

